TRIVANDRUM SANSKRIT SERIES

No. LIV.

# THE

# SPHOTASIDDHI NYÂYA VICHÂRA.

EDITED BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1917.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५४.

# स्फोटसिद्धिन्यायविचारः ।

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
त. गणपतिशास्त्रिणा
संशोधितः ।

---

स च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

# PREFACE.

Sphotasiddhinyâyavichâra is a treatise on Vyâkarana. It deals with the doctrine of Sphota recognised by grammarians, on the method adopted by Mandanamisra and Bharatamisrā in their works known as Sphotasiddhi.

The work was edited with the help of a palm-leaf manuscript in Malayalam character belonging to Mr. Panthalam Raja, which does not reveal the name of the author.

Trivandrum,<br>9th April 1917.

T. GANAPATI SÂSTRÎ.

## निवेदना ।

अयं स्फोटसिद्धिन्यायविचारो नाम व्याकरणग्रन्थः । वैयाकरणैरभ्युपगतं स्फोटाख्यं शब्दतत्त्वं श्रीमण्डनमिश्रभरतमिश्रप्रणीतस्फोटसिद्धिग्रन्थोपदर्शितया दिशात्र स्थाप्यते । ग्रन्थकर्तुस्तु नामधेयं न दृष्टम् ।

पन्तलराजसंबन्धिनं केरलीयलिपिं तालपत्रग्रन्थमाश्रित्यायं संशोधितः ॥

अनन्तशयनम्
९-४-१९१७.

त. गणपतिशास्त्री.

॥ श्रीः ॥

# स्फोटसिद्धिन्यायविचारः ।

---

प्रणिपत्य गणाधीशं गिरां देवीं गुरूनपि ।
मण्डनं भरतं चापि मुनित्रयसमुं हरिम् ॥ १ ॥

अथ प्रत्यक्षतोऽर्थापत्त्यागमाभ्यामपि स्फुटम् ।
वर्णेभ्यो व्यतिरेकेण शब्दतत्त्वं प्रसाध्यते ॥ २ ॥

अस्ति तावद् गकारादिवर्णबुद्धिविलक्षणम् ।
गौरित्यादिषु विज्ञानमेकं पदमिति स्फुटम् ॥ ३ ॥

न चास्य विषयो वर्णास्तेषु नैकत्वधीर्भवेत् ।
न च तत्समुदायोऽपि क्षणिकत्वादसम्भवात् ॥ ४ ॥

न चैकस्मृत्युपारोहात् समुदायस्य सम्भवः ।
वर्णेषु क्रमबुद्धेषु युगपत् स्मृत्यसम्भवात् ॥ ५ ॥

सम्भवेऽपि च तेष्वेव विपरीतक्रमेष्वपि ।
गकारादिषु विज्ञानं गौरित्येकं प्रसज्यते ॥ ६ ॥

G. P. T. 2301. 500 23-7-1922. B

वर्णस्वरूपसम्भिन्नं पदज्ञानमितीयता ।
तदालम्बनतैवास्येत्येतदप्यसमञ्जसम् ॥ ७ ॥

यथा ह्यवयविज्ञानं नैवावयवगोचरम् ।
तत्स्वरूपानुविद्धत्वेऽप्येवं गौरिति धीरपि ॥ ८ ॥

अथ तत्रावयव्येकः प्रतीतिमधिरोहति ।
इहाप्यनुभवारूढं कथमेतदपोह्यते ॥ ९ ॥

तदेवम्भूतविज्ञानप्रामाण्यादस्ति तत् पदम् ।
व्यतिरेकेण वर्णेभ्य इति तावन्निरूपितम् ॥ १० ॥

किञ्चाभिधेयधीहेतुभावोऽपि खलु युज्यते ।
तस्यैव न तु वर्णानां तद्बुद्ध्यनुदयात् ततः ॥ ११ ॥

तत्र तावद् गकारादेरेकैकस्मान्न वाच्यधीः ।
उदेति यदि चेदस्ति प्रथमेनैव गादिना ॥ १२ ॥

वर्णेनोच्चरितेनेह गवाद्यर्थाभिधानतः ।
उच्चारणं द्वितीयादिवर्णानां स्यान्निरर्थकम् ॥ १३ ॥

तदुच्चारणसामर्थ्यं नैकैकस्मात् ततोऽर्थधीः ।
समुदायोऽपि वर्णेषु क्रमजातेष्वसम्भवी ॥ १४ ॥

नानावक्तृप्रयुक्तेभ्यो न च सा दृश्यतेऽर्थधीः ।
यौगपद्येऽपि वर्णेभ्यो नापि क्रमविपर्यये ॥ १५ ॥

तस्मादसम्भविन्येभ्यो वर्णेभ्यो वाच्यधीः कथम् ।
स्वनिमित्ततया तेभ्यः कल्पयत्यपरं पदम् ॥ १६ ॥

ननु दृष्टं परित्यज्य सर्वथादृष्टमार्गणम् ।
कुर्वन् मृगयसे नूनं पिपासुर्मृगतृष्णिकाम् ॥ १७ ॥

तस्मात् सर्वजनीनेषु वर्णेष्वेवार्थसङ्गतिः ।
मृग्यतां निजराद्धान्तरागानाकुलया धिया ॥ १८ ॥

वर्णेभ्यो यदवस्थेभ्यो दृश्यते नाभिधेयधीः ।
तदवस्थास्तु मा भूवन् काममर्थस्य बोधकाः ॥ १९ ॥

यद्विशेषविशिष्टेभ्यस्तेभ्यः सैषोपजायते ।
तद्विशेषजुषां तेषां बोधकत्वमुपेयताम् ॥ २० ॥

अदृष्टं परिकल्प्यालं दृष्टात् कार्यस्य सङ्गतेः ।
सत्यमायुष्मता दृष्टो विशेषोऽत्र मनाग् यदि ॥ २१ ॥

उपाकरिष्यद् वर्णेभ्योऽप्युदपत्स्यत वाच्यधीः ।
इदं तावद् भवानद्य प्रष्टव्यो मतिमत्तमः ॥ २२ ॥

एकत्वेऽप्यन्त्यवर्णस्य गौरित्यादाविहार्थधीः ।
भिद्यते स तु भेदोऽत्र कस्मादित्यथ मन्यसे ॥ २३ ॥

सहायभेदाद् भेदः स्यादिति नेह सहायता ।
कार्ये व्याप्रियमाणस्य सहायत्वं हि दृश्यते ॥ २४ ॥

असतां पूर्ववर्णानां तदानीं व्यापृतिः कथम् ।
असतामपि साहाय्यं वर्णानां यदि विद्यते ॥ २५ ॥

केवलान्त्यप्रयोगेऽपि भवेदेवाभिधेयधीः ।
केवलान्त्यप्रयोगे तु तदन्येषामजन्मतः ॥ २६ ॥

उदेति नार्थधीः सर्वप्रयोगे तूदयं व्रजेत् ।
जनित्वोपरमात् पूर्ववर्णानामित्यसङ्गतम् ॥ २७ ॥

अजातानन्वयध्वस्तवस्तुनोर्न भिदा यतः ।
तस्माद्द्दृष्टेषु वर्णेषु वाच्यधीगत्यसम्भवात् ॥ २८ ॥

न तेषामभिधातृत्वमिति निश्चिनुमो वयम् ।
नन्वेवमपि ये केचिदभिदध्युर्विपश्चितः ॥ २९ ॥

वर्णानामभिधातृत्वमवष्टभ्य विधान्तरम् ।
यथा कर्माणि दर्शादीन्यपूर्वपरिकल्पनात् ॥ ३० ॥

क्रमवर्त्त्येऽपि सम्भूय जनयन्ति फलं तथा ।
प्राचीनवर्णानुभवसंस्कारसहितोऽन्तिमः ॥ ३१ ॥

वर्णोऽभिधेयधीहेतुरित्येतत् किं न युज्यते ।
वर्णानुभूतिसम्भूतसंस्कारान्नाभिधेयधीः ॥ ३२ ॥

इति पर्यनुयोगोऽपि नावकाशं न वाश्नुते ।
स्मृतिहेतोस्तु संस्कारात् संस्कारोऽयं विलक्षणः ॥३३॥

इहाभिधेयधीहेतुभावमस्याभिदध्महे ।
सामर्थ्यमेव संस्कारशब्देनेह विवक्षितम् ॥ ३४ ॥

वर्णानामभिधेयावबोधोत्पादनलक्षणम् ।
स्वरूपस्यैव वर्णान्त्यानुपलब्धेरनन्तरम् ॥ ३५ ॥

तद्विरुद्धस्वरूपेतरानुभूतिवशात् क्षतिः ।
सामर्थ्यं त्वविरुद्धान्यसामर्थ्योपहितोदयम् ॥ ३६ ॥

स्थितमेवार्थबोधैकस्वफलप्रसवावधि ।
तस्मात् प्रत्यक्षतः सिद्धा वर्णा ये च परस्परम्॥३७॥

स्वसामर्थ्यवशाद्युक्ता बोधयन्त्यर्थमञ्जसा ।
एतदप्यभिधातव्यं न परीक्षकसंसदि ॥ ३८ ॥

अविचारितचारुत्वादिति मन्यामहे वयम् ।
सामर्थ्यं नाम कार्यैककल्प्या शक्तिरिहाश्रिता ॥ ३९॥

कार्यस्यादर्शने सैषा कथं कल्पनमर्हति ।
इहाभिधेयधीः कार्यमन्त्यवर्णादनन्तरम् ॥ ४० ॥

दृश्यते तेन तस्यैव सामर्थ्यं परिकल्प्यते ।
सन्निधावेव पूर्वेषामन्त्यवर्णादिहार्थधीः ॥ ४१ ॥

इति तच्छक्तिजनकं सामर्थ्यमितरेष्वपि ।
इति चेत् सन्निधिः कोऽयमेषामायुष्मतो मतः॥४२॥

अद्याप्यस्मत्प्रयत्नोऽयं यदभावान्न हीयते ।
तत्र त्वकालविच्छिन्नं पौर्वापर्यं हि सन्निधिः ॥ ४३ ॥

आकालिकानां वर्णानामिति यद्यभ्युपेयते ।
पौर्वापर्यं हि तत् पूर्वापरकालविशिष्टता ॥ ४४ ॥

वर्णानां नियतस्तत्र कालविच्छेदसम्भवः ।
उपकार्योपकारित्वं तेषामेवोपपद्यते ॥ ४५ ॥

अन्योन्यशक्तिसंवादात् समकालभुवो हि ये ।
परस्परानुसन्धानरहितास्ते पृथक् पृथक् ॥ ४६ ॥

ज्ञाता वर्णाः कथं तेषामुपकार्योपकारिता ।
अधिष्ठाय समर्थं हि सामर्थ्यं कार्यसाधकम् ॥ ४७ ॥

अर्थबुद्ध्युपकारित्वं केवलस्य ततः कथम् ।
दर्शादिषु त्वपूर्वस्य कल्पनं युज्यते विधेः ॥ ४८ ॥

शब्दैरर्थाभिधानं तु न वैधमिति सम्मतम् ।
यस्त्वात्मनिष्ठः संस्कारो वासनाख्यः स्मृतिप्रदः ॥ ४९ ॥

प्रागेवोपेक्षितस्तस्य नार्थधीहेतुतैस्त्ययम् ।
वर्णानुभवजस्यास्य वाच्यधीहेतुता यदि ॥ ५० ॥

तदानुभूय संस्कारसनाथचरमश्रुतेः ।
स्मृतिप्रत्यक्षरूपैका धीरुदेतीत्यसङ्गतम् ॥ ५१ ॥

युगपद्धि द्वयोत्पत्तेरसङ्गतिरिति स्थितिः ।
उपान्त्यस्मरणान्त्यानुभवयोरेककालता ॥ ५२ ॥

न चोपपद्यते तस्माद् वर्णेभ्यो नार्थधीगतिः ।
अथेदृग्दोषसंस्पर्शशङ्कावैधुर्यबन्धुरः ॥ ५३ ॥

वर्णानां वाचकत्वेऽन्यः प्रकारोऽन्यैर्निरूप्यते ।
प्रत्येकमभिधातृत्वं वर्णानां नाभ्युपेयते ॥ ५४ ॥

किन्तु तत्समुदायस्य नापाद्यस्तदसम्भवः ।
यद्यप्युच्चारणाधीनवर्णानुभवभाविताः ॥ ५५ ॥

भावना भावयन्त्येकं विज्ञानं स्मृतिलक्षणम् ।
तत्र प्रकाशमानानां वर्णानामुपपद्यते ॥ ५६ ॥

संघीभावस्ततस्तेषामभिधातृत्वनिश्चयः ।
परस्परानपेक्षत्वाद् वर्णानुभवभावनाः ॥ ५७ ॥

जनयन्ति न सम्भूय स्मृतिरूपैकसंविदम् ।
इति पर्यनुयोगोऽयं नावतारमिहार्हति ॥ ५८ ॥

उच्चारणपराधीना वर्णानामनुभूतयः ।
युगपत् सकलान् वर्णान् प्रकाशयितुमक्षमाः ॥ ५९ ॥

युगपद् बुद्धसकलवर्णसाध्येऽर्थधीफले ।
उपायतामगच्छन्त्यः प्रेरयन्ति स्वभावनाः ॥ ६० ॥

तदुपायत्वसिद्ध्यर्थमेकस्मरणसाधने।
ननूद्बोधकसापेक्षा भावनाः स्मृतिहेतवः ॥ ६१ ॥

न चेह भावनोद्बोधहेतुः कश्चन विद्यते।
नैवं यत्रानुभूतीनां फलेन चरितार्थता ॥ ६२ ॥

तत्रानुपङ्गसिद्धत्वाद् भावनाः स्मरणं प्रति।
उद्बोधकमपेक्ष्यैव समर्थाः सहकारिणम् ॥ ६३ ॥

अत्र स्यादनुभूतीनां न साक्षात् फलयोगिता।
इति तत्प्रेरितास्त्वन्यानिरपेक्षाः स्वभावनाः ॥ ६४ ॥

स्फुटं तत्फलसम्पत्तिसमर्थं स्मृतिलक्षणम्।
जनयन्त्येकविज्ञानमित्येकस्मृतिसम्भवः ॥ ६५ ॥

तत्र सम्भूय संक्रान्ता वर्णा एवार्थबोधकाः।
मिथ्यैतत् क्रमबुद्धेषु स्मृतिः क्रमवतीति यत् ॥६६॥

शतं विंशतिरित्यादौ युगपत् स्मृतिदर्शनात्।
अस्त्येवाबालवनिताप्रत्यक्षमपानुभूतितः ॥ ६७ ॥

एकैकवर्णानुभवसमनन्तरभाविनी।
प्रत्येका धृतनिर्ह्रासेर्वर्णदर्पणतानिता ॥ ६८ ॥

तत्पूर्वं क्रमबुद्धेषु वर्णेषु यदनन्तरम्।
यौगपद्येन विज्ञानं तदर्थज्ञानकारणम् ॥ ६९ ॥

इत्यास्थेयमनिच्छद्भिरपि स्वानुभवात् परैः ।
अतस्तेषां प्रयत्नोऽयमजाकण्ठस्तनायते ॥ ७० ॥

ततोऽभिधेयाववोधहेतुभावोपपत्तये
मृग्य वर्णातिरेकेण न वाक्त्त्वमिहेत्यलम् ॥ ७१ ॥

एतत् सर्वं स्वराद्धान्तरागाकुलितचेतसाम् ।
महामोहविलासानामुपर्युपरि जृम्भितम् ॥ ७२ ॥

यदभ्यधायि विज्ञानमेकं स्मरणलक्षणम् ।
अनेकवर्णविषयं नैव सम्भोभवीति तत् ॥ ७३ ॥

न ज्ञेयगतमेकत्वं विना ज्ञानैक्यसम्भवः ।
ज्ञानस्य खलु सर्वत्र ज्ञेयाकारानुपातिता ॥ ७४ ॥

यत्र ज्ञेयस्य भिन्नत्वेऽप्येकविज्ञानदर्शनम् ।
एकजात्यादिसम्बन्धात् तत्र सञ्जाघटीति तत् ॥ ७५ ॥

न च वर्णेषु शब्दत्वं विनैका जातिरिष्यते ।
एकबुद्धिनिमित्तत्वं तस्य यद्यभ्युपेयते ॥ ७६ ॥

अतिप्रसङ्गो दुर्वारस्तस्य सर्वत्र सङ्गतेः ।
न दरीदृश्यते वर्णेष्वेकः साधारणो गुणः ॥ ७७ ॥

गकारादिषु भिन्नेषु येनैकज्ञानसम्भवः ।
एकार्थबोधकत्वात् स्यादेकविज्ञानवेद्यता ॥ ७८ ॥

वर्णानामप्यनेकेषामिति यद्यभ्युपेयते ।
एकार्थबोधहेतुत्वसिद्ध्यर्थं हि निरूप्यते ॥ ७९ ॥

एक वर्णेषु विज्ञानमित्यन्योन्याश्रयं भवेत् ।
अतः कथञ्चिदप्येकं विज्ञानं वर्णगोचरम् ॥ ८० ॥

नार्हतीह समाधानमुपपत्तिपरिक्षयात् ।
अङ्गीकृत्य तथाप्येतद् दूषणान्तरमुच्यते ॥ ८१ ॥

यदैकस्मृत्युपारोहो वर्णानामभ्युपेयते ।
तत्रत्ययौगपद्यं स्यात् तदार्थज्ञानकारणम् ॥ ८२ ॥

तुल्यत्वाद् यौगपद्यस्य तदा नार्थधियो भिदा ।
सरोरसनदीदीनजराराजादिषु स्फुरेत् ॥ ८३ ॥

क्रमस्याप्युपकारित्वात् तद्भेदाद् यदि सा स्फुरेत् ।
नोपकार्योपकारित्वं दृष्टं क्वापि विरुद्धयोः ॥ ८४ ॥

किञ्च कोऽयं क्रमो नाम स्वतन्त्रोऽसौ न दृश्यते ।
परतन्त्रोऽपि कालस्य वस्तूनामुत तद्गताम् ॥ ८५ ॥

नाद्यः स्वाभाविकस्तस्य क्रमो नैकस्य युज्यते ।
औपाधिकोऽयमिति चेदिदं तर्ह्युपवर्ण्यताम् ॥ ८६ ॥

उपाधयोऽक्रमाः किं स्युरथवा सक्रमा इति ।
न तावदक्रमास्तेषां स्यात् क्रमोपाधिता कथम् ॥

सक्रमत्वे ह्युपाधीनां स्वतो वायं क्रमो भवेत् ।
कालाद्वा न स्वतस्तत्र व्यर्था स्यात् कालकल्पना ॥

कालात् तु यद्युपाधीनां सक्रमत्वमुपेयते ।
तत्र कालादुपाधीनां कालस्योपाधितः क्रमः ॥ ८९ ॥

इत्यन्योन्याश्रयापत्तिरतः कालस्य न क्रमः ।
अथत्रायुष्मता कालाः कल्प्यन्ते बहवो यदि ॥९०॥

मुहूर्तदिनमासर्तुवत्सरादिविभेदतः ।
ते चापि किमनित्याः स्युर्नित्या वेति निरूप्यताम् ॥

नित्याश्चेत् सर्वकालानां सदा सर्वत्र सन्निधेः ।
सर्वर्तुलिङ्गसाङ्कर्यमक्रमत्वं च जायते ॥ ९२ ॥

अनित्या यदि तेषां किं कालान्तरकृतः क्रमः ।
स्वतो वा तत्र कालान्तराधीनत्वं न युक्तिमत् ।

तत्क्रमस्यापि कालान्तराधीनत्वेऽनवस्थितेः ।
स्वतश्चेदस्तु वस्तूनां परं (वा? स्वा)भाविकः क्रमः ॥

न वृथा कल्प्यतां कालस्तत्क्रमो वा तपस्विभिः ।
एवं तावत् क्रमो नैव कालस्येति प्रतीयते ॥ ९५ ॥

तद्वतामपि वस्तूनां तथैवासङ्गतः क्रमः ।
नित्यत्वं यदि वा तेषामनित्यत्वमुपेयते ॥ ९६ ॥

नित्यत्वे न क्रमस्तेषां नित्यत्वादेव युज्यते ।
अनित्यत्वेऽपि वस्तूनां सहकालभुवां पुनः ॥ ९७ ॥

यौगपद्यविरोधेन नान्योन्यापेक्षया क्रमः ।
अतीतानागतापेक्षस्तत्रासहभुवामपि ॥ ९८ ॥

अपेक्ष्यमाणस्याभावात् सम्भोभोति कथं क्रमः ।
अस्तु वायं क्रमो नाम काममन्येषु वस्तुषु ॥ ९९ ॥

तथाप्ययुक्त एवायमभीष्टो वर्णसंश्रितः ।
नित्याश्च विभवो वर्णास्तेषां योयुज्यते ? क्रमः ॥१००॥

न काला नित्यताहेतोर्न देशा विभुतावशात् ।
अनित्यत्वेऽपि वर्णानामुच्चारणविनाशिनाम् ॥ १०१ ॥

अतीतानागतोदन्तविज्ञानविमुखात्मनाम् ।
कथं परस्परापेक्षः क्रमः सञ्जगमीत्ययम् ॥ १०२ ॥

नित्यत्वेऽपि क्रमस्तेषां यदि स्याद् बुद्ध्युपाधिकः ।
नैवं पूर्वधियस्तत्र क्रमिकास्तदुपाधयः ॥ १०३ ॥

तन्नाशादेव नष्टः सन् क्रमोऽसाविह साम्प्रतम् ।
एकस्मृतिसमारूढानास्पदीकुरुते कथम् ॥ १०४ ॥

ऐक्यादलभमानेयं धीरेका स्मृतिलक्षणा ।
स्वयमेव क्रमं तेषु स्वगतेषु कथं नयेत् ॥ १०५ ॥

अथ प्राचीनवुद्ध्युत्थः क्रमो नष्टोऽपि साम्प्रतम् ।
वर्णस्वरूपवत् स्मर्यमाणः सन्नेकधीगतान् ॥ १०६ ॥

विषयीकुरुते वर्णानित्येतदसमञ्जसम् ।
प्राक् क्रमानुभवाभावात् पश्चात् तत्स्मृत्यसङ्गतेः ॥

अनुभूतेषु वर्णेषु स्मृतिरूपापि तत्क्रमे ।
अनुभूत्यात्मिकेयं धीरित्येतद् दुर्वचं वचः ॥ १०८ ॥

अतीतत्वात् तथा लिङ्गराहित्यादप्ययं क्रमः ।
प्रत्यक्षादनुमानाद्वा यतो नैवानुभूयते ॥ १०९ ॥

किञ्चायमुपलब्ध्युत्थः क्रमस्तु विषयान्तरे ।
न भेदकतया दृष्टः पटबुद्धिक्रमो यथा ॥ ११० ॥

(दे?द)शान्तादन्यतो वापि समारभ्यावगन्तृभिः ।
गम्यमाने पटे बुद्धिक्रमभेदे स्फुटे सति ॥ १११ ॥

भिन्नोऽयं पट इत्येवं न कदाचिदुदेति धीः ।
तस्माद् बुद्धिक्रमोऽत्रापि नैव भेदकतामियात् ॥

एवं सति न वर्णेषु कथञ्चिदपि सङ्गतः ।
क्रम सरोरसाद्येषु ततोऽसौ वाच्यभेदधीः ॥ ११३ ॥

क्रमभेदेन दुस्साधैवायुष्मद्भिरतोऽर्थधीः ।
नैकस्मृतिसमारूढवर्णमूलेत्यवस्थितम् ॥ ११४ ॥

ततो नावाध्यमानैकविज्ञानोदयहेतवः ।
वर्णा नैवाभिधेयावबोधकारणमप्यमी ॥ ११५ ॥

अतः सिद्धमिदं प्रत्यक्षार्थापत्तिप्रमाणकम् ।
व्यतिरेकेण वर्णेभ्यः शब्द(त्व ? त)स्त्वसिति स्थितम् ॥

इत्थं (त्व ? तु)नाभिधातृत्वं लोकसिद्धमपह्नुतम् ।
वर्णानां लौकिकी सिद्धिर्लोकादेवावधार्यते ॥ ११७ ॥

शब्दादर्थं वीजानीम इत्येषा लौकिकी हि वाक् ।
शब्दशब्दो न वर्णेषु व्यवस्थापनमर्हति ॥ ११८ ॥

क्रमेण यौगपद्याद्वा तेभ्यो यस्मान्न वाच्यधीः ।
अतोऽत्रार्थं विजानीम इति वाक्यसमन्वयात् ॥

वर्णातिरिक्तस्फोटात्मन्यसौ वर्तितुमर्हति ।
इति लोकापलापोऽपि केवलं वर्णवादिनाम् ॥ १२० ॥

तत् सिद्धं लौकि(को ? के)ऽपीदमिति सर्वमनाकुलम् ।
अत्राक्षिप्तस्वराद्धान्तयुक्तिभिः पूर्वपक्षिभिः ॥ १२१ ॥

परपक्षसमाक्षेपे प्रयासः क्रियतेऽधुना ।
ननु वर्णातिरेकेण पदं नाभ्युपेयते ॥ १२२ ॥

अनुभूतिवलात् तत्र कथं तदनुभूयते ।
न तावदेभ्यो वर्णेभ्यः पृथगेतत् प्रतीयते ॥ १२३ ॥

अङ्गुलीभ्यो यथाङ्गुष्ठस्तथाभ्युपगमे सति ।
नानर्थक्यं द्वितीयादिवर्णानामेव केवलम् ॥ १२४॥

सर्वेषामपि वर्णानामुच्चारणमनर्थकम् ।
अथ तैस्तस्य सम्बन्धः कश्चिदभ्युपगम्यते ॥ १२५ ॥

संयोगः समवायो वा तत्राद्यो नापृथक्त्वतः ।
समवायोऽपि नारम्भकृतो वर्णेषु सम्भवी ॥ १२६ ॥

तन्तुष्विव पटस्यात्र नोपलम्भकृतोऽपि सः ।
तथा व्यक्तिषु गोत्वादेरुपलब्धेरसम्भवात् ॥ १२७ ॥

तत् पृथक्त्वापृथक्त्वाभ्यां वर्णेभ्य इह कस्यचित् ।
उपलब्धुमशक्यत्वात् पदं नाम किमास्थितम् ॥ १२८॥

ननु प्रागेवोद्घोषि वर्णबुद्धिविलक्षणम् ।
एकं पदमिति ज्ञानमिति यद्यभिधित्ससि ॥ १२९ ॥

नैतद् वास्तवविज्ञानं पदमेकमितीदृशम् ।
व्यपदेशानुवादित्वाद् दारा इति बहुत्ववत् ॥ १३० ॥

पदबुद्धिरियं (नाना)वर्णरूपनिवेशिनी ।
तद्वर्णव्यतिरेकेण पदमेतन्न सिध्यति ॥ १३१ ॥

अत्र सम्प्रति साधीयःसमाधिमभिदध्महे ।
शब्दस्वरूपमेवैकं पदमित्यवभासते ॥ १३२ ॥

अनुभूत्यनुसन्धानादेकः शब्द इतीदृशात् ।
तत्र वर्णावभासोऽयं नान्तरीयक इष्यते ॥ १३३ ॥

गोत्वावगमवेलायां तद्व्यक्तिप्रतिभानवत् ।
ननु तत् तत्र युक्तं स्यात् *व्यङ्ग्यव्यञ्जकता यतः॥१३४॥

तदभावेन तत्साम्यं कस्मादत्र निगद्यते ।
मैवं व्यञ्जकतास्त्येव वर्णानां तत्पदं प्रति ॥ १३५ ॥

व्यक्तिरूपैरनेकैस्तैर्ध्वनिभिर्वर्णसंज्ञितैः ।
गोशब्दत्वादिसामान्यं व्य(ञ्ज ? ज्य)ते यत् पदं हि तत्

उत्क्षेपणक्षणैर्भिन्नैः क्रमिकैर्व्य(ञ्ज ? ज्य)ते यथा ।
उत्क्षेपणत्वसामान्यमेकं तद्वदिदं पदम् ॥ १३७ ॥

नैकैकस्मात् गकारादेर्गोशब्दत्वादि गृह्यते ।
अतो नास्त्येव सामान्यमिति चेत् सममेव तत् ॥ १३८॥

एकक्षणे प्रतीतेऽपि नोत्क्षेपत्वादि गृह्यते ।
इति त(त्रापि तन्न)स्यादिति नैकोऽत्र चोद्यते ॥१३९॥

प्रथमेन स्वतो व्यक्तमपि नैव प्रकाशते ।
भेदेनाकुशलत्वादरावृत्तौ तु प्रतीयते ॥ १४० ॥

इति चेत् पूर्ववर्णेन गोशब्दत्वं स्वरूपतः ।
व्यक्तं गगनशब्दत्वान्न भेदेनावभासते ॥ १४१ ॥

---

* 'व्यक्तिव्यञ्जकता' इति स्यादिति भाति ।

मध्यमोत्तमवर्णाभ्यां व्यवस्त्यावृत्तौ प्रकाशते ।
तस्मादुत्क्षेपणत्वादिजातिर्येनाभ्युपेयते ॥ १४२ ॥

तेनेदमपि गोशब्दत्वादिसामान्यमिष्यताम् ।
युक्तितस्तादिह स्फोटः स शब्दो नोऽर्थबाधकः ॥१४३॥

इत्थं चोत्क्षेपणत्वादिप्रतिबन्धा समर्थितः ।
जातिस्फोटस्ततः स्पष्टं व्यक्तिस्फोटः समर्थ्यते ॥

असत्यपदवर्णादिभेदं निर्गुणमक्रमम् ।
नादाभिव्यङ्ग्यमपरे शब्दतत्त्वं प्रचक्षते ॥ १४५ ॥

तत्र यत् क्रमिकानेकवर्णाकारावभासनम् ।
व्यञ्जकध्वनिधर्मानुविधानात् तन्न वास्तवम् ॥१४६॥

निरंशेष्वपि वर्णेषु यथा सन्ध्यक्षरादिषु ।
अकारादिभ्रमस्तद्वद् गकारादिभ्रमः पदे ॥ १४७ ॥

अतोऽत्र वर्णेऽवयवाः पदे वर्णाः पदान्यपि ।
वाक्ये तानि महावाक्ये नैव सन्ति स्वरूपतः ॥ १४८ ॥

वर्णेऽवयवधीर्वाक्ये पदधीर्वर्णधीः पदे ।
सङ्कीर्णाकारशक्तित्वाद् व्यञ्जकानामयं भ्रमः ॥१४९॥

जनयन्तो विपर्यासं व्यञ्जयन्त्यखिलं पदम् ।
ध्वनयः स्थानसाम्यादेः सदृशं तत् परस्परम् ॥१५०॥

प्राकृता वैकृताश्चेति ध्वनयो द्विविधा मताः ।
प्राकृता नाम ते तत्र स्फोटात्मा यैः प्रतीयते ॥१५१॥

प्रतीतस्य तु तस्यैव चिरकालमवस्थितिः ।
यैरेते वैकृता नादास्तत्कालावृत्तयो मताः ॥ १५२ ॥

प्राकृतध्वनिकालोऽयं स्फोटात्मन्युपचर्यते ।
मात्राकालादिरूपेण नेतरस्तूपचर्यते ॥ १५३ ॥

तत्र केचन नादानां स्फोटाभिन्नत्वमूचिरे ।
असंवेद्यत्वमितरे स्वातन्त्र्यं मेनिरे परे ॥ १५४ ॥

इन्द्रियस्यैव संस्कारो नादैरिति परे जगुः ।
विषयस्येति कतिचिदपरे तूभयोरिति ॥ १५५ ॥

ननु भ्रमनिमित्तत्वं नादानां नोपपद्यते ।
तेषां तत्त्वपरिच्छेदनिमित्तत्वादसम्भवात् ॥ १५६ ॥

न चास्ति नियतिर्भ्रान्तेर्नैकरूप्यं च दृश्यते ।
न विपर्ययराहित्यं न क्रमस्तत्क्रमः कथम् ॥ १५७ ॥

उच्यते सम्भवत्येव नादानां भ्रमहेतुता ।
शब्दतत्त्वपरिच्छेदहेतुत्वे सत्यपि स्फुटम् ॥ १५८ ॥

यथा दूरे हि दृश्यन्ते तरवः करिरूपिणः ।
(पूर्वं पश्चाच्च)तत्रस्थैस्त एव तरुरूपिणः ॥ १५९ ॥

दर्शनाहितसंस्कारक्रमादेवमिहापि ते ।
नादास्तत्त्वपरिच्छेदे विपर्यासेऽपि कारिणः (?) ॥ १६० ॥

स्थानादिसाम्यसम्पन्नसादृश्या ये परस्परम् ।
नादास्तेषामभिव्यक्तिहेतुत्वेऽङ्गीकृते सति ॥ १६१ ॥

व्यञ्जकान्तरसादृश्यनियमाद् व्यञ्जकस्य हि ।
सर्वत्र सर्वदा भ्रान्तिरपि युक्तिमती भवेत् ॥ १६२ ॥

नियतक्रमयोगित्वं विपर्यासस्य युज्यते ।
यतस्तद्धेतुभूतानां नियतक्रमयोगिता ॥ १६३ ॥

सर्वेषां प्रतिवक्तृणामेकरूपतया भ्रमः ।
ऐकरूप्येण तद्धेतुभूतानामिह युज्यते ॥ १६४ ॥

यद्विपर्ययराहित्याद् भ्रमो नायमितीरितम् ।
तन्न युक्तं यतोऽस्त्येव युक्तितोऽत्र विपर्ययः ॥ १६५ ॥

अनेकवर्णग्रहणसमनन्तरभाविनी ।
यस्मादुदेति सर्वेषामेकं पदमितीह धीः ॥ १६६ ॥

अतोऽस्ति बाधकज्ञानमिति नानात्वधीभ्रमः ।
स्यादेतदिह नानात्वविरोधित्वं न युज्यते ॥ १६७ ॥

एकत्वबुद्धेर्यस्मात् सा भेदरक्ता भवेत् स्वयम् ।
अविरोधे तु नास्त्येव बाध्यबाधकता तयोः ॥ १६८ ॥

तस्माद्भेदं निराकर्तुं न क्षमैकत्वधीरिति ।
असदेतद्यथा लोके वदनं दर्पणादिषु ॥ १६९ ॥

अनेकभेदसम्भिन्नं गम्यमानमपि स्फुटम् ।
एकत्वाद्वस्तुतस्तस्य स्वतो भेदविरोधतः ॥ १७० ॥

निरस्तनिखिलानेकभेदमेकं प्रतीयते ।
दीपादिभेदानुगमेऽप्ययमेकः प्रतीयते ॥ १७१ ॥

यथा च त्वन्मते वर्णः प्रत्यभिज्ञाबलात् स्फुटम् ।
तथेदमपि वाक्तत्त्वं भेदरक्तमपि स्फुटम् ॥ १७२ ॥

स्वप्रत्ययावगम्यैकमभिन्नमवसीयते ।
इत्येवं गलिताशेषभेदोऽनवयवः स्फुटम् ॥ १७३ ॥

अनेकध्वन्यभिव्यङ्ग्यो व्यक्तिस्फोटः समर्थितः ।
ननु नादैरभिव्यक्तिः स्फोटस्येति न युज्यते ॥ १७४ ॥

वर्णैरिहाभिधेयस्य क्रमिकत्वादिसाम्यतः ।
नैवं नादैरभिव्यक्तिस्तस्य प्रत्येकमिष्यते ॥ १७५ ॥

स्फोटस्याविकलं तेन न दोषः क्रमवत्तया ।
पूर्वध्वनिकृता व्यक्तपरिच्छेदपरम्परा ॥ १७६ ॥

उत्तरव्यक्ततद्व्यक्तिजन्मानुगुणभावनाः ।
भावयत्यन्तिमः पूर्वभावनासहितो ध्वनिः ॥ १७७ ॥

अभिव्यक्ततरं स्फोटं प्रतिपत्तुः प्रकाशयेत् ।
यथा परीक्षमाणानां रत्नतत्त्वं प्रयत्नतः ॥ १७८ ॥

अस्पष्टप्रत्ययाधेयसंस्कारसहितेऽन्तिमे ।
प्रत्यये प्रतिभाति प्रागप्रकाशितमेव तत् ॥ १७९ ॥

तथैवान्तिमबुद्धौ स्यात् स्फोटव्यक्तिरपि स्फुटा ।
इतरध्वनिवैयर्थ्यमेवं सति निराकृतम् ॥ १८० ॥

संस्कारोऽप्यत्र नापूर्वः क्लृप्तादन्यः समाश्रितः ।
ननु ध्वनिभिरव्यक्तव्यक्तिरत्र कथं भवेत् ॥ १८१ ॥

यतोऽनवयवः स्फोटो भवद्भिः परिकल्पितः ।
यद्धि सावयवं वस्तु तदव्यक्तं प्रतीयते ॥ १८२ ॥

स्थूलसूक्ष्मांशभेदेन निरंशं न तथा पदम् ।
नैवमव्यक्तता नाम ज्ञाताज्ञातत्वलक्षणा ॥ १८३ ॥

तस्याः सावयवत्वेन नोपयोगो मनागपि ।
ज्ञातावयवभागेन ज्ञातत्वं वस्तुनो भवेत् ॥ १८४ ॥

अज्ञातावयवद्वारमज्ञातत्वं च युज्यते ।
इत्येवमुपयोगः स्यादिति चेत् तन्न सुन्दरम् ॥ १८५ ॥

ज्ञातावयवभागस्य ज्ञातत्वमिह केवलम् ।
अज्ञातावयवांशस्याप्यज्ञातत्वं परं भवेत् ॥ १८६ ॥

अव्यक्तत्वमतो नास्ति वस्तुतोऽवयवेष्वपि ।
अतोऽवयविनः कस्मात् तद्द्वारा तत् समर्थ्यते ॥

सत्यमव्यक्तता तेषां प्रत्येकं न निरूप्यते ।
किन्तु सा सम्भवत्येव सहितानामतो भवेत् ॥

सैषा सावयवस्यापि तद्द्वारा वस्तुनः स्फुटम् ।
इति यत् कैश्चिदुदितं विकल्पं सहते न तत् ॥ १८९ ॥

भवत्ववयवेष्वेवमव्यक्तत्वं कथञ्चन ।
तथाप्यत्रावयविनस्तद्द्वारा तन्न युज्यते ॥ १९० ॥

तद्द्वारता तदुत्पत्त्या तदध्यासेन वा भवेत् ।
तत्र पूर्वस्तदुत्पत्तिपक्षो नैवोपपद्यते ॥ १९१ ॥

ज्ञातेभ्योऽविदितेभ्योऽपि तेभ्यश्चोत्पत्त्यसम्भवात् ।
विदितावयवद्वारा ज्ञाततोत्पत्तिरस्तु वा ॥ १९२ ॥

तथाप्यज्ञाततोत्पत्तिरज्ञातेभ्यो न युज्यते ।
अज्ञातता हि ज्ञानस्य प्रागभावात्मिका मता॥१९३॥

प्रागभावस्य नोत्पत्तिः क्वचिदप्युपपद्यते ।
किञ्च स्वबाधके ज्ञाने जातेऽप्यज्ञातता कथम्॥१९४॥

क्षमा तेन सह स्थातुमसावौत्सर्गिकी सती ।
ज्ञातांशहेतुके ज्ञाने जातेऽप्यन्यांशहेतुकम् ॥ १९५॥

ज्ञानं च जायते तस्मात् तयोर्युक्ता सहस्थितिः ।
इति चेत् तर्हि सर्वत्र धारावाहिकसंविदाम् ॥१९६॥

आद्यया वस्तुषु ज्ञातेष्वन्याभिस्तद्वेदनात् ।
अस्फुटत्वं प्रसज्येत ज्ञाताज्ञातस्वलक्षणम् ॥ १९७ ॥

एवं यस्मात् तदुत्पत्तिर्नाव्यक्तत्वस्य सिध्यति ।
ततस्तस्य तदुत्पत्त्या तद्द्वारत्वं निराकृतम् ॥ १९८ ॥

एवमध्यासपक्षेऽपि तद्द्वारत्वं न सिध्यति ।
आरोप्यारोपविषयज्ञानेनाध्यास इष्यते ॥ १९९ ॥

तथाच ज्ञातताध्यासो ज्ञानाभावान्न सम्भवी ।
यत एवं तदुत्पत्तिस्तदध्यासोऽप्यसङ्गतः ॥ २०० ॥

अतोऽत्रावयवित्वेन नोपयोग इति स्थितम् ।
अतोऽनवयवस्यापि वस्तुनो व्यक्तता भवेत् ॥२०१॥

तेन ध्वनिभिरव्यक्तपरिच्छेदस्य सम्भवात् ।
निरंशनिर्गुणाध्येतस्फोटव्यक्तिः समर्थिता ॥ २०२ ॥

नन्वेवं वर्णजन्याभिरस्पष्टव्यक्तिभिः क्रमात् ।
अस्त्वर्थधीरिति प्राप्ते समाधिरभिधीयते ॥ २०३ ॥

इन्द्रियाधीनबुद्धेरेवास्पष्टस्पष्टरूपता ।
लिङ्गशब्दाद्यधीनाया न बुद्धेर्निश्चितैव सा ॥ २०४ ॥

स्फोटधीरिन्द्रियाधीना शब्दाधीनाभिधेयधीः ।
अस्फुटा स्फोटधीरेव नार्थधीरिति तत् स्थितम् ॥

अथ बुद्ध्यनुसंहारमन्तस्तत्त्वं प्रचक्षते ।
भागैः प्रकाशितं शब्दमपरे तत्त्वदर्शिनः ॥ २०६ ॥

नन्वत्र जातिव्यक्त्यन्तस्तत्त्वदर्शनभेदतः ।
अनेकधा कल्पितत्वाद् दर्शनस्यानवस्थितिः ॥ २०७ ॥

नैवं त्रयाणामेतेषां दर्शनानामुपक्रमे ।
भेदेऽपि नोपसंहारे भेदलेशोऽपि दृश्यते ॥ २०८ ॥

श्रोतॄणां रुचिवैचित्र्याद् भेदेनैव क्रमः कृतः ।
अन्ततस्त्वेकमेवेदं दर्शनं वस्तुतः स्थितम् ॥ २०९ ॥

अपिचोतत्व इत्यादेरागमादपि गम्यते ।
वर्णातिरिक्तमेवेदं शब्दतत्त्वमिति स्फुटम् ॥ २१० ॥

उतत्व इति मन्त्रस्य ह्ययमर्थः प्रतीयते ।
स्वविवर्तमहीशैलसमुद्राद्यात्मना स्थिताम् ॥ २११ ॥

पश्यन्नपि पुमान् वाचं कश्चिन्नैव ददर्श ताम् ।
इयं मही अयं शैलः समुद्रोऽयमिति भ्रमन् ॥ २१२ ॥

अहं पश्यामि वाक्तत्त्वमित्येवं नावगच्छति ।
किन्त्वन्यदेव पश्यामीत्येवमेवाभिमन्यते ॥ २१३ ॥

तेनात्र वाग्विवर्तत्वात् सर्वस्यैव हि वस्तुनः ।
तत् पश्यन् वाचमेवासौ स्वतः पश्यति यद्यपि ॥

तथापि तत्तयाज्ञानात् फलतो न ददर्श ताम् ।
तथा रज्जुं पुमान् कश्चित् सर्पाकारतया स्थिताम् ॥

पश्यन्नप्यन्यथाख्यातिविप्रलब्धतया तदा ।
अयं सर्पः पुरो मेऽत्र वसतीति परिभ्रमन् ॥ २१६ ॥

रज्जुं रज्जुतयाजानन् फलतो नैव पश्यति ।
तद्वद् वाचमपीत्येवमाद्यस्यार्थः प्रदर्शितः ॥ २१७ ॥

तथा कश्चित् पुमान् वाचं ब्रुवाणामर्थमञ्जसा ।
पूर्वध्वनिकृताव्यक्तज्ञानसंस्कारसङ्गतैः ॥ २१८ ॥

उत्तरध्वनिभिस्तैस्तैः क्रमेण स्फुटतामिताम् ।
पदमेकं वाक्यमेकं महावाक्यमिदं तथा ॥ २१९ ॥

इत्येवमादिरूपेण शृण्वन्नप्यन्यथा भ्रमन् ।
व्यञ्जकारोपितैर्भेदक्रमच्छेदैः प्रतारितः ॥ २२० ॥

व्यवहारोपयोगित्वाद् वाच वर्णादिरूपिणीम् ।
ब्रुवाणस्योपवर्षस्याप्यजानन्नञ्जसा मतम् ॥ २२१ ॥

तामेनामवजानीते फलतो न शृणोति तत् ।
इति द्वितीयपादार्थस्तृतीयार्थोऽथ वर्ण्यते ॥ २२२ ॥

ननु वर्णस्वरूपस्य देशे काले नरेषु वा ।
बाधाभावात् क्वचिन्नापि वाचं वर्णस्वरूपिणीम् ॥

शृण्वन् नैव शृणोतीति वदितुं शक्यते कथम् ।
इत्याशङ्क्य क्वचिद् बाधामाह तस्य नरान्तरे ॥२२४ ॥

उतो इत्यादिना (त?)स्याङ्घ्रेस्तृतीयस्येति सङ्गतिः ।
अप्यन्यस्मै तथा वाणी पुरुषाय महात्मने ॥ २२५ ॥

शब्दशास्त्रपरिज्ञानजातसंस्कारशालिने ।
योगाभ्यासविशुद्धान्तःकरणायात्मवेदिने ॥ २२६ ॥

वर्णादिभ्रमसंछन्नां तद्भ्रमापनयेन ताम् ।
तात्त्विकीं तनुमात्मीयां स्फुटं विवृणुते स्वयम् ॥

इत्थं तृतीयपादार्थस्तुरीयार्थोऽथ कथ्यते ।
अर्थस्याभिहितस्याह जायेवेत्यादिनोपमाम् ॥ २२८ ॥

इति सङ्गतिरस्यार्थः कथ्यते तदनु स्फुटम् ।
यथा खल्वङ्गना काचिदृतुस्नाता रजोहतम् ॥ २२९ ॥

अपास्य प्राक्तनं वासः परिधाय मनोहरम् ।
वासोऽन्यत् प्रणयोत्कर्षक्रमादपगतत्रपा ॥ २०३ ॥

शनैः शनैः स्रंसमाने तस्मिन्नपि च वाससि ।
भृशं कामयमाना सा कन्दर्पशरपीडिता ॥ २३१ ॥

रिरंसुरखिला स्वीयां तनुं विवृणुते स्फुटम् ।
पत्ये तद्वदियं वाणी शाब्दिकाय महात्मने ॥ २३२ ॥

शब्दशास्त्रमहातीर्थस्नानपूता शुभा सती ।
अपनीतापशब्दाख्यदुष्टाच्छादनबन्धुरा ॥ २३३ ॥

प्रयोगाहृतसद्वर्णशोभनाच्छादनान्विता ।
योगाभ्याससमयप्रेमश्लथदान्ध्यमयत्रपा ॥ २३४ ॥

वर्णाकारविपर्यासवसनेऽपि शनैःशनैः ।
स्रंसमाने परामेकां तनुं विवृणुते निजाम् ॥ २३५ ॥

इत्येवं तुर्यपादार्थो मन्त्रस्यास्य निरूपितः ।
पश्यन्निति पदेनात्र चक्षुर्ग्राह्यत्वमीरितम् ॥ २३६ ॥

वाचस्तद्वाग्विवर्तत्वं विना नैवोपपद्यते ।
वस्तुनो दृश्यमानस्य तेन मन्यामहे वयम् ॥ २३७ ॥

प्रपञ्चो वाग्विवर्तोऽयं दृश्यमान इति स्फुटम् ।
शृण्वन् न च शृणोतीति श्रवणाश्रवणे श्रुते ॥ २३८ ॥

वाचस्ते सविपर्यासनिर्विपर्यासरूपताम् ।
विना नैवोपपद्येते कल्पयामस्ततो वयम् ॥ २३९ ॥

वर्णाकारविपर्यासरूषिता वागिति स्फुटम् ।
तनुं विवृणुतेऽन्यस्मायित्येतदपि यद्वचः ॥ २४० ॥

तदप्यावेदयत्येव वाचं वर्णातिरेकिणीम् ।
वर्णरूपा तनुर्येषां वाचः सा विवृता स्फुटम् ॥२४१॥

सर्वेभ्यः प्रतिवक्तृभ्य इति नैषा तनुर्मता ।
तन्वं विसस्र इत्यत्र वाचं तां निर्णयामहे ॥ २४२ ॥

वर्णातिरेकिणी वाणीत्यनवद्यं ततोऽखिलम् ॥२४२॥

इति विगलितदोषः स्फोटवादः स्थितोऽसा-
विह खलु परगीतो वर्णवादः परास्तः ।
अभिमतपरबुद्धेश्चार्थबुद्धेरयोगा-
च्छ्रुतिवचनविरोधात् तन्नयानुग्रहाच्च ॥ २४३ ॥

स्फोटसिद्ध्युदितन्यायदिगेषा दर्शिता मया ।
पद्यबन्धेन बालानामवबोधाय केवलम् ॥ २४४ ॥

निशाचरतमोलीनजगदुन्मेषहेतवे ।
जानकीजानये तस्मै तेजसां निधये नमः ॥२४५॥

इति स्फोटसिद्धिन्यायविचारः समाप्तः ।

---

शुभं भूयात् ।